Tel: "Samskrutam" दूरध्वनिः - "संस्कृतम्"

वाणीं भजत गैर्वाणीम् !

# गैर्वाणी

## मासिकी पत्रिका

संपुटः १३ | 15 th JUNE 1975 | क्रमांकः ६

की. शे. आर्. बि. रामकृष्णराजः

राक्षस ज्येष्ठाङ्कः

शकाब्दाः १८९७

मूल्यम् ०–५० पैसाः

# विषयसूचिका

★

# भजत संस्कृतम्

रचयिता — खण्डविल्लि सूर्यनारायणशास्त्री ।

---

अमरसेवितं मुनिभि र्रचितं अमृतसन्निभं प्रकृतिसुन्दरम् ।
वेदशास्त्रसन्मन्दिरं परं मधुरवाङ्मयं भजत संस्कृतम् ॥

धातुमूलजं शब्दशक्तिजं विश्वविस्तृतं विश्वमोहकम् ।
सर्वशास्त्रसद्विषयबोधकं सर्वतारकं भजत संस्कृतम् ॥

प्रेमभावनाप्रेरकं सदा तत्वभासकं शृतिसमीहितम् ।
नवरसाऽन्वितं नवरसोदयं भारतीपदं भजत संस्कृतम् ॥

आढ्यसत्कवीश्वरवरै र्वृतं कांक्षिताऽर्थदं सर्वदेहिनाम् ।
ऐक्यभावनाचोदकं शिवं भुवनभूषणं भजत संस्कृतम् ॥

प्राच्यसंस्कृतिं भव्यरीतिभिः भासयत्सदा कीर्तितं परैः ।
सर्वसौख्यदं सर्वजीविनां भुक्तिमुक्तिदं भजत संस्कृतम् ॥

ऐकमत्यदं देशवासिनां सर्वजीविषु प्रेमभाजनम् ।
विश्वपुष्टिदं विश्वतुष्टिदं विश्वशान्तिदं भजत संस्कृतम् ॥

मेक्सुमुल्लरुप्रभृतिपण्डितप्रेमभाजनं "गैटे" पण्डितम् ।
ताण्डवक्रियापुलकितं कृतं अद्भुतावहं भजत संस्कृतम् ॥

भूमिवासिनः स्वर्गवासिनः एककेन्द्रके मेलयत्यहो ।
सर्ववाङ्मये ष्वेत दद्भुतं परमहर्षदं भजत संस्कृतम् ॥

---

# सम्पादकीयम्

## नरः पतितकायोऽपि यशःकायेन जीवति

लोके बहवो जन्तवः प्रतिक्षणं जायन्ते, म्रियन्ते च । तान् प्रति न कोऽपि खेद माप्नोति, जननमरणरूपधर्मस्य प्राणिमात्रसाधारणत्वात् । किन्तु यस्य पुरुषस्य मृतिः जातेः, राष्ट्रस्य च खेदकारणं भवति । तादृशेषु विरलेषु उत्तमपुरुषेषु **श्री रा. बो. रामकृष्णराजः** अन्यतमः । विशिष्यायं राजा सं. भा. प्र. सभायाः १९४८ वत्सरा दारभ्य १९७३ वत्सरावधि उपाध्यक्षः आसीत् । अस्मात्कारणात् तादृशि पुरुषे दिवं गते सति, गैर्वाण्या सस्तापप्रकटनं, तदात्मशान्तिप्रार्थनं चावश्यकर्तव्यमेव।

अयं महाशयः वीर्यविवेकविद्याविनोदविख्याते कार्वेटिनगरराजकुटुम्बे १०-२-१८९१ संवत्सरे लब्धजन्माऽऽसीत् । क्रमश स्स्वग्रामे, काञ्चीनगरे प्राथमिकविद्यां परिसमाप्य, मद्रास्नगरे उन्नतविद्या मभ्यस्य न्यायवादिपरीक्षाया मुत्तीर्ण स्सन् स्वीयमण्डलप्रधाने चित्तूरुनगरे न्यायवादिवृत्या जीवितमारब्धवान् । हृदयाळु रयमाश्रितेषु दयाळुः, देशस्वातन्त्र्यसंपादने स्पृहयाळुः, कुमार्गगमने संशयाळुश्चसन् न्यायवादिवृत्तेः सार्थकतामापादयन् पल्लीपत्तनवासिनां जनानां मादरपात्रमभूत्, येनासौ तालूकाबोर्डु, जिल्लाबोर्डु इत्येतयोराध्यक्षपदवीं प्राप्तुं प्रभवति स्म । यस्य राज्ञःपरिपालने पाठशालाना मभिवृद्धि, र्बहूना मुपाध्यायानां वृत्तिलाभः,पल्लीनां यातायातसौकर्यं, अनेकशः चिकित्सालया श्चाऽसन् । निसर्गतः,संस्कृते,संगीते नाटककळायां चासक् तोऽयं, बहुळकार्यव्यापृतोऽपि, तदभ्यास मनुत्सृजन्, संस्कृतसंगीतादिषु प्रावीण्यं सम्पादयामास । तदनुगुणतया,

चित्तूरे रामबिलासभाख्याया: कस्याश्चन नाटकशालाया:निर्मा-णस्य मुख्यकारणं भूत्वा स्वयं तस्या: आजन्माध्यक्ष स्समभूत्-स्वयमऽपि नाटकेषु पात्रधारी-सन्, प्रेक्षकाणा ममंदानन्दमजन-यत्। वायुलीनवाद्ये कृतहस्तोऽभूत्। बहुवारं द्वारं नायुडु-बाद्यगोष्ठीः शृण्वन्, तस्मै कदाचन भूरि विराळ च प्रादापयत्। येनास्य संगीत-रासिक्यं विज्ञायते। आमुष्मिकसुखकामनयाऽनुदिनं श्रीमद्रामायणभगवदगीतादि ग्रन्था-न्पारायण मकरोत्।

भारतदेशा त्पाश्चात्यानां निष्कासने गान्धिमहात्मनः अनुयायी आसीत्। स्वातन्त्र्यप्राप्त्य-नन्तरं अविभक्तमद्रासुराष्ट्रे प्रथमतया शासनोच्चसंभाया: (Legislative Council) अध्यक्ष (President) पदवी मधिष्ठाय आत्मन: समयस्फूर्ति, परिपा-लनादाक्षिण्यं च प्रादर्शयत्। स्वतन्त्रान्ध्रराष्ट्रे चायं शासन-सभासभ्य स्सन् प्रान्तीयानां विद्यावैद्यादि साहाय्यकरणबद्ध-कङ्कण आसीत्।

स्वाभिरुच्यनुगुणं आध्रराष्ट्र-सङ्गीतनाटकसंस्था नूतना एन मध्यक्षं वव्रे। अयमध्यक्ष राजा यथोचितं सङ्गीतनाटकयो रभि-वृद्धये साहाय्य माचचार। अन्ततोयं स्वग्रामे कार्वेटिनगरे जपपारायणादिना, सद्ग्रन्थपठ-नेन, भगवन्नामस्मरणेन च प्रशान्तजीवितं यापयन्, चतुर-शीतितमे वयसि किंचिदिव रुग्णो भूत्वा देहं तत्याज। यद्य त्वय मद्याऽस्माकं मध्मे न वर्तते, तथऽप्येतत्कृत धर्मकार्याणि, साह्यादिकञ्च भुवि विराजन्ते, तत्पर्यन्तमयं यश:कायेन जीव-तीत्येव निश्चय:। एवं विधोत्तम-पुरुषस्याऽत्मनस्सुस्थिरा शान्ति र्भूया दित्याशास्यते। तस्य कुटुम्बस्य च सहानुभूति व्यक्ती-क्रियते।

## श्रीमच्छंकरजयन्ती महोत्सवः

१६—५—७५ दिनांके सायङ्काले संस्कृतभाषाप्रचारिण्याः सभायाः भवने वैभवोपेतं प्राचलत् । सभ्याः, भक्ताः, पौराश्चानेके उत्सवसमुत्सुका स्समायाताः । प्रथमं तावत् आचार्यस्वामिनां चित्रपटस्य यथोक्तं पूजानैवेद्यादिकं निर्वृत्तम् । अनन्तरप्रवृत्त- सभायां **श्रीमान् बहुजनपल्लि शेषाचार्यः** (सभा प्रधानमन्त्री) ममागतानां स्वागतं वदन् सभायाः प्रारम्भ मकरोत् । **श्री जि. वासुदेवन् महाशयः** (Assistent Professor, Vaishnava College, Madras) आचार्यस्य अवतारावश्यकतां, पाण्डित्यप्रभावं, देशाटने तत्र तत्र दुर्मतानां खण्डनवैखरीं, मठानां स्थापन चोद्दिश्य वैमर्शिक- दृष्टचा सुदीर्घ मुपन्यास मांग्लभाषायां चकार ।

ततः **आर् गोपालन्** (Retired Tamil Pandit) सर्वस्वरूपस्य परब्रह्मणः परिज्ञानं, सर्वभूतेषु समदृष्टित्वं, तादृशपरमात्मा जीव- रूपेण प्रतिप्राणिहृदयाकाशे जीवरूपेण भासत इत्येतेंशाः आचार्य- स्वामिनां प्रबोधैः लोके प्रचारिता आसन्निति तमिलभाषायां अवदत् ।

अनन्तरं **श्री एन्, रामनाथार्यः** (सभायाः कार्यदर्शी) शंकरा- चार्यस्य पित्रो व्रतचर्यां, अवतारकथां, विद्याभ्यासं, गुरुसमाश्रयं, मतस्थापनसरणिं च सप्रमाण प्रस्फुटमान्ध्रभाषायां सुविस्तृत मवदत् । आचार्यविरचितग्रन्था नुद्दिश्य, विशिष्य **"मनीषापञ्चक"** गधिकृत्य चाऽभणत् ।

अन्ततः सभाप्रधानमन्त्रो **श्रीमान् ब. शेषाचार्यः** सभ्यानां कृतज्ञतां प्रकटयन् श्रीशङ्कराचार्येण विरचितानि नैकविधदेवता- स्तोत्राणि, तस्याचार्यस्य सर्वदेवतासाम्यस्य प्रबलं साक्ष्यमिति सोपपत्तिकं न्यरूपयत् ।

सभायां परिसमाप्तायां सर्वेभ्यो भक्तेभ्यः तीर्थप्रसादादिकं वितीर्णम् ।

मेडवरं मल्लिकार्जुनशर्मा, लेपाक्षी ।

[ पूर्वानुबन्धः ]

★

प्रातरारभ्यैतावत्पर्यन्तमपि स अस्मद्गृहे एव आसीत् । प्रमाणार्थं तेन पूरितानि जलपूर्णान्येतानि पात्राणि पश्यन्तु भवन्त" इति जलभरितानि पात्राणि दर्शयामास ।

सायंसमये श्रीरङ्गन्नमहाशयस्य दर्शन मावाभ्यां लब्धम् । तदा स महाशयः 'आर्यौ ! अस्य पत्तनस्य समीपग्रामवासी कश्चन आगत्य, तस्य गृहे प्रवर्त्यमानविवाहकार्यार्थं मां बलात्कारेण नीतवान् । तस्मात् ग्रामादद्यैव प्रतिनिवर्तयामी'ति बभाण । तदा आवाभ्यां 'आर्य ! भवन्तः प्रातरेव तैलशकटे विजयवाड-नगरं जग्मुरिति श्री दिण्टकुर्ति सुब्बारावुगृहे वदन्ति । दशघण्टा-वादनपर्यन्तमपि युष्माभिरत्रैव स्थितमिति श्री नोरि वेङ्कटेश्वरः प्रमाणं दर्शयति । भवद्भिस्तु एतद्द्वयमप्यपहाय अन्यत्प्रदेशं कथ्यते । कथमेतत् ?' इति सविनयं पृष्टम् । तदा तेन दत्तं समाधानमिदं आर्यौ ! मया 'आगच्छा'मीत्युक्तमस्तु । मम वचनरक्षणार्थं श्रीरामचन्द्रः मम रूपं धृत्वा, तत्र तत्र गत्वा, तेषां कार्याणि समाचरति । अहं यत्र कुत्राप्येकत्रैव वसामि । इदं रहस्य-मविज्ञाय जनाः 'रङ्गन्नकः अत्रास्ति, तत्रासीदिति विकलीभवन्ति' इति । आवाभ्यां प्रत्यक्षतया दृष्टोयं सन्निवेशः, न कण्ठान्तरात् शृतः । अनेन रामनामस्मरणादपि श्रीकृष्ण इवानेकरूपाणि

एकस्मिन् समये एव धर्तुं शक्यमिति स्पष्ट भवति न किम्? 'अनन्याश्चिन्तयन्तो मां ये जनाः पर्युपासते। तेषां नित्याभियुक्तानां योगक्षेमं वहाम्यहं' मिति भगवतः प्रतिज्ञा अक्षरशः सत्यमिति निरूपिता न भवति किम् ?

अनेकशः तत्कालेऽलभ्यानि कुसुमानि, फलानि च श्रीरङ्गन्नमहाशयः मह्यं दर्शितवान्, ददौ च। अत्र पाठकमहाशयानां साधारणतः एष संदेहः संजायेत। "अयं रङ्गन्नमहाशयः अस्माभिः यदा वाञ्छितं भवति तदा एवंविधबहुरूपधारणमित्यादिशक्तीः प्रदर्शयति किम् ?" इति। अत्र विज्ञापनीयः विज्ञातव्यश्च कश्चन आध्यात्मिकविषयः अस्ति। एतादृशस्थित्यां विद्यमानानां श्रीरङ्गन्नमहाशयादिमहानुभावानां तादृशी विशेषशक्तिः स्वेषामस्तीति, अन्येषां नास्तीति, अतः अन्येभ्यः जनेभ्यः "वयमधिकशक्तिसंपन्नाः" इत्यादि भावा एव न विद्येयु। सर्वत्र समदर्शनमेव तेषां सहजलक्षणं भवति। तस्मात् कारणात् तादृङ्महिमाप्रदर्शनेन कीर्त्यादिकं लभ्यमिति काङ्क्षा न भवेत्। सर्वं खल्विदं ब्रह्मेति भावना यदा स्थिरा, नित्यानुभवसिद्धा च भवति तदैव सा शक्तिः लभ्यते। तस्याः शक्त्याः प्राप्त्यनन्तरं अधिकत्वाल्पत्वभेदाभावात् यत्र कुत्रापि ममाधिक्यं प्रदर्शनीयमिति सङ्कल्प एव तेषां न जायेत। परन्तु तादृङ्महिमाप्रदर्शनेन यस्य कस्यापि आध्यात्मिकमार्गे अभिवृद्धिः, विश्वासः, प्रवेशश्च भवेदिति भगवतः सङ्कल्पो भवति चेत् तेभ्य एव एतादृशं लीलादिकं प्रदर्शितं भवति। श्रीकृष्णः अनुदिनमप्यनेकरूपाणि दधार किम् ? कति वारं कति जनेभ्यः विश्वरूपं प्रदर्शयामास? कति वा पर्यायं

गोवर्धनपर्वतमुद्दधार ? श्रीशंकराचार्याः कतिवारं कनकामलकानि वर्षयामासुः ? परिशीलयन्तु भवन्तः ।

श्रीरङ्गन्नमहाशयः रामनामजापकः । तथाऽपि तस्य आञ्जनेयः, गणपतिः, शिवः, दुर्गा, मन्त्रालयराघवेन्द्रस्वामिनः इत्यादिदेवतास्सर्वा अपि नित्यपरिचिता एव । एकैकशक्तिः एतद्देवतानां रूपेण, समस्तसृष्टिरूपेण च भातीति सत्यं अनुभवपूर्वकतया ज्ञातुमेव नामस्मरण, भजनम्, तपः इत्यादीनि साधनानि प्रोक्तानि । 'वासुदेव स्सर्वमिति स महात्मा सुदुर्लभः' इति गीता। यदपि भगवतः नाम एकं गृहीत्वा जप्यते चेत्, विद्यमानस्य दैवस्य एकैकत्वात्, तच्च दैवं समस्तसृष्टिरूपवासुदेवत्वात्, अन्यानि च दिव्यरूपाणि प्रत्यक्षीभवन्ति । अत एव अस्माभि राराध्यमानानां सर्वेषामपि देवानां पृथक् पृथक् "सहस्रनामानि" विद्यन्ते। आराध्यदेवस्स एव सर्वनामधारी, सर्वरूपधर इति ज्ञानप्राप्तिरेव तेषां पारायणे फलम् । आराध्यदैवाद्भिन्नस्य देवस्य नामग्रहणं वा, पूजनं वा, अस्माकमाराध्यमूर्तेः कोपकारणं भवतीति भावः अज्ञानमूलक इति निरूपयितुं रामनामैव जपं कुर्वन्, शिवमारुतिमन्त्रालयराघवेन्द्रादिदिव्यरूपाणि दृष्टवतोऽस्य श्रीरङ्गन्नाख्यस्य अद्य विद्यमानभक्तवरेण्यस्य जीवितमेव प्रमाणम् ।

भगवान् श्रीरामचन्द्रः अद्यापि विद्यत इति निरूपणं कुर्वन्तं अमुं रङ्गन्नाख्यभक्तवरेण्यं प्रति सारहीनैर्वचनैः "गैर्वाणी"पाठकेभ्यः विज्ञापनं व्यासरचयितुः सुकृतमेव । "प्रह्लादश्चास्मि दैत्याना" मिति भगवद्गीतायां श्रीकृष्णः स्वयमेव प्रह्लाद इति निर्धारया

मास। भक्तस्य, भगवतश्च भेदः नास्ति। भक्तेः प्रभाव-निरूपणार्थं भगवानेव भक्तरूपेणावतरति।

अस्मिन् कालेऽपि सदा रामनामस्मरणात् दैवत्वस्थितिं प्राप्तस्य श्री"रङ्गन्न" इति व्यवह्रियमाणस्यास्य निराडम्बरभक्त-वरेण्यस्य अस्मत्समकालीनस्य दर्शने यदि कुतूहलं संजायेत तर्हि व्यासरचयिता आत्मानं धन्यं मनुते। सदुपयोगार्थमेव तस्य-महात्मनः विलासः अत्र विज्ञाप्य, विरम्यते।

श्रीरङ्गन्नबाबुगारु,
c/o श्रीमान् के. गोपालकृष्णमाचार्युलुगारु,
२/११ नर्वेक् फार्मा,
ब्राडीपेटा, गुण्टूरु – २.

---

# मेघदूतानुशीलनम्

— इन्द्रमोहनसिंहः

यक्षो वर्षर्तौ रामगिर्याश्रमे निवसन् विचारयति – धरित्री हरितभरितस्वरूपं धारयिष्यति। नदीनां शुष्कतापि न स्थास्यति। मयूराणां नृत्यमपि सोल्लासं भविष्यति । ईदृशहर्षोल्लासादीनां दर्शनाद् मम का दशा वर्तिष्यते । अनया कल्पनया एवाहं दुःखमतिशय मनुभवामि । पुन र्मम प्रियायाः कीदृश्यवस्था भविष्यति। यद्यपि प्रियस्यायतिमिलनप्रत्यय एव विप्रयोगे रमणीनां जीवनाधारः परं तस्या विरहदशा यथा सारल्येन सोढुमर्हा भवेत् तथा यतिष्ये।

प्रत्यासन्ने नभसि दयिताजीवितालम्बनार्थी
जीमूतेन श्वकुशलमयीं हारयिष्यन्प्रवृत्तिम् ।
स प्रत्यग्रैः कुटजकुसुमैः कल्पितार्घाय तस्मै
प्रीतः प्रीतिप्रमुखवचनं स्वागतं व्याजहार ।।

मेघस्य समक्षं सन्देशस्तु कण्ठाश्लेषप्रणयिविरहविधुरस्य यक्षस्य प्रियायाः, परं गन्तव्या नगरी बाह्योद्यानस्थितहरशिरश्चन्द्रिकाधौतहर्म्या वर्तते। ईदृशेन कथनेन कविदृष्टिरित्येव यदङ्गिशृङ्गाररसेन सह सा शान्तरसाय रुचिं दर्शयिष्यति । अतो भक्तिपदानां यदग्रे सविस्तरं प्रतिपादनं प्राप्यते तत् शृङ्गारातत्यवर्णनोपरि कस्यापि श्रोतुराक्षेपस्य परिणामत्वादिति न मन्तव्य मपि तु स्वाभाविकी परिणति रेवात्र ज्ञातव्या । ईदृश आक्षेपः डा. रामजी उपाध्यायस्य "संस्कृत साहित्य का आलोचनात्मक इतिहास" इति नाम्नः पुस्तकस्य प्रथमभागे दर्शनीयः (पृ ४६३) । यक्षस्य पावन-

रामगिर्याश्रमे वसतिनिर्माणं सीतास्नानात् पुण्यतीर्थानां सामीप्यं तथैव वन्द्यरघुपतिपदाङ्कितस्य रामगिरेः कथनं तस्य भक्तिभावद्योतनायालम्। तस्य गोपवेषविष्णुवद् मेघस्य वर्णनमेतद् भृशं प्रतिप्रादयति।

तद्यथा – रत्नच्छायाव्यतिकर इव प्रेक्ष्यमेतत्पुरस्तात्
वल्मीकाग्रात्प्रभृति धनुः खण्डमाखण्डलस्य।
येन श्यामं वपुरतितरां कान्ति मापत्स्यते ते
बर्हेणेव स्फुरितरुचिना गोपवेषस्य विष्णोः॥

क्रमिकवर्णनस्यापूर्वं सामञ्जस्य मत्र निगदितम्। यक्षो मेघमाह – "यात्राया मध्यखेदयुक्त स्त्वं पर्वतेषु विश्रम्य जलवर्षजात् क्षीणतनुः सन् स्रोतसां जलं पीत्वा यास्यसि" इति मे परामर्शः। उक्तवचनस्य सम्यङ्निर्वाहोऽग्रिमपङ्क्तिषु दृश्यते। रामगिरे मेघस्य यात्रारब्धा। प्रियमित्रं रामगिरिं गाढमालिङ्ग्य गमनानुज्ञां प्राप्य मार्गे दिग्गजानां स्थूलशुण्डाप्रहारान् परिहरन् स सरसवेतसशालिनः स्थानादुत्तराभिमुखः सन् आकाशे उत्पतति। अध्वनि तस्य संयोग इन्द्रधनुषा सह भवति यो मयूरपुच्छवद् वर्तते मेघस्तु श्यामवर्णः। इत्थं मयूरपुच्छत्वात् श्यामवर्णत्वाच्च स भगवान् कृष्णो ज्ञातः। तदनन्तरं तस्य समक्षं मालाख्यो देश आगतः। सद्यो हलकर्षणेन सुरभितं मालक्षेत्र मभिवृष्य किञ्चित् पश्चिमां दिशं स गच्छति, पश्चात् क्षिप्रगतिशीलः सन्नुत्तरं व्रजति। तत्राम्रकूटः तस्य स्वागतं विदधाति। तस्योपरि विश्रम्य मेघः स्वश्रान्तिं दूरीकरोति, तस्य शोभां वर्धयति, आसारेण तस्य नैदाघमग्निञ्च शमयति। मित्रोपकारं विधायावश्यमेव स रिक्ततां गतः परमग्रे नर्मदां

प्राप्य तस्याः तोय मादायान्तःसारगौरवं प्राप्तवान् । एव मेवा-लकापुरीपर्यन्त मपूर्वं मेव वर्णनसामञ्जस्यं काव्यकौशलञ्च वर्तते ।

कालिदासस्यानुभवक्षेत्रं विस्तृत मासीत् । तस्याभिव्यक्ति-स्वरूपं नितरां हृद्यम् । अन्यथा कथं सोऽल्पशब्देषु पाठकानामनेकान् संस्कारान् जागरयितुं समर्थो भवेत् । यथा – सन्तप्तानां त्वमसि शरण मस्मिन् वाक्ये । यः सन्तप्तः तस्य मेघो दयमानः । सन्तापो ग्रीष्मर्तोरपि भवितु मर्हति । येन पथिकानां दुर्गतिः, पादपवीरुन्-नद्यादीनां शुष्कता गमनागमनबाधा, कर्मकराणां पीडनमादीनि प्रतीयन्ते । एषां मेघः सन्तापच्छेदकः । विरहियक्षस्य सन्देश-वाहको भूत्वा स तस्यापि तापं हरति । यक्षस्य जीवनदायकं संदेशं यक्षीं प्रदाय स तस्याः सन्तापहारकः भवति ।

माननीयभावनानुरूपमेव ब्रह्मप्रकृतिरपि चित्रिता । यदि यक्षः कनकवलयभ्रंशरिक्तप्रकोष्ठः तर्हि प्रकृतिरपि विरहकात-रास्ति । यथा – यक्षस्य दिवसगणनातत्परया एकपन्त्या समा निर्विन्ध्यापि मेघस्य सौभाग्यं विरहावस्थया व्यनक्ति –

वेणीभूतप्रतनुसलिला ता मतीतस्य सिन्धुः
पाण्डुच्छाया तटरुहतरुभ्रंशिभि र्जीर्ण-पर्णैः ।
सौभाग्यं ते सुभगविरहावस्थया व्यञ्जयन्ती
कार्श्यं येन त्यजति विधिना स त्वयैवोपपाद्यः ॥

कामार्ता हि प्रकृतिकृपणा श्चेतनाचेतनेषु यक्षः स्वक्रियासु दृश्यते । अहर्निशं तस्य गतिविधयः प्रियानुबद्धा एव । तस्या चित्रं निर्माय यदा स आत्मानं प्रियाचरणपतितं लिखितु मिच्छति तदा-

श्रुप्रवाहः तं निरोधयति । प्रियांगस्पर्शं प्राप्य दक्षिणपवनो वहतीति विचार्य स त मालिङ्गयति । विभिन्ननिसर्गसौन्दर्ययुक्तवस्तुषु स प्रियां पश्यति एवम् –

श्यामास्वंगं चकितहरिणीप्रेक्षणे दृष्टिपातं
वक्त्रच्छाया शशिनि शिखिनां बर्हभारेषु केशान् ।
उत्पश्यामि प्रतनुषु नदीवीचिषु भ्रूविलासान्
हन्तैकस्मिन्क्वचिदपि न ते चण्डि सादृश्य मस्ति ॥

---

## वाल्मीकिदृष्टं विश्वरूपम्

ज. शेषाद्रि अय्यंगार्यः,
[न्यायाऽऽध्यापकः, श्री वें. प्राच्यकलाशाला, तिरुपति.]

"सहस्रशीर्षं देवं विश्वाक्षं विश्वशंभुवं, विश्वं नारायणं देवमक्षरं परमं प्रभुं," इति कृष्णयुजुःसु नारायणानुवाके, "सहस्रशीर्षा पुरुषः, सहस्राक्षः सहस्रपात्, सभूमिं विश्वतो वृत्वा अध्यतिष्ठत् ; दशांगुल" इति पुरुषसूक्ते च निखिलजङ्गमाजङ्गमप्रपञ्चाधारभूतं भगवतो विश्वरूपमुद्घुष्टम् । छन्दोगानामुपनिषत्सु च वैश्वानरविद्याप्रकरणे औपमन्यवप्रभृतीनां षण्णां महर्षीणां उपास्यं भगवतो विश्वरूप "तस्य हवा एतस्यात्मनो वैश्वानरस्य मूर्धैव सुतेजाः चक्षुर्विश्वरूपः प्राणः पृथग्वर्त्मा सदेहो बहुळो वस्तिरेव रयिः पृथिव्येव पादौ" इति वर्णितम् । अथर्वणिके च

"अग्निर्मूर्धा चक्षुषी चन्द्रसूर्यौ दिशः श्रोत्रे वाग्विवृताश्च वेदाः। वातः प्राणो हृदयं विश्वमस्य पद्भ्यां पृथिवी ह्येष सर्वभूतान्तरात्मा" इति अग्निरिति द्युलोकः उच्यते। एतदेव सहस्रनामध्यानश्लोके शङ्करभगवत्पादैः "भूःपादौ यस्य नाभिर्वियदसुरनिलः चन्द्रसूर्यौ च नेत्रे, कर्णावाशाः शिरोद्यौः मुखमपि दहनो यस्य वास्तेय मब्धिः" इति प्रत्यभिज्ञापितम्। एवं च द्युलोकमारभ्य पातालपर्यन्तं देवतिर्यक्स्थावरमनुष्यपशुपक्षिसरीसृपादिरूपाणां भूतानां परमात्मशरीरत्वे ज्ञातेसति सर्वेषु समदर्शनरूपो योगो जायते। तदा एवं ज्ञानवान् कोपि कमपि न विद्विषेत्, कस्मैचिदपि न द्रुह्येच्च। "सर्वभूतात्मके तात जगन्नाथे जगन्मये, परमात्मनि गोविन्दे मित्रामित्रकथा कुतः?" इति प्रह्लादोक्ति मनुसृत्य संहृष्टविश्वात्मानो महात्मानः ब्रह्मविदः महर्षयः भगवद्विग्रहभूतं जगदेव समाराधयामासुः। इतिहासपुराणकर्तारः व्यासवाल्मीकिमुखाः महर्षयः तपःप्रभावसम्पादितदिव्यज्ञानचक्षुषः स्वेन संदृष्टं विश्वरूपं भगवतः तथैवोपन्यबध्नन्।

देवर्षिसाधुगणैः प्रार्थितो भगवान् धृतजगदुपकारार्थमानुषरूपः आश्रितपाण्डवपरिरक्षादीक्षितः कौरव्यपश्वालम्भनं समरयज्ञं अनुष्ठापयितुकामः सर्वलोकेश्वर मात्मानं पार्थसारथिं कृत्वा सेनयोर्द्वयोर्मध्ये रथं स्थापयति स्म। अस्थानस्नेहकारूण्याकुलचित्तं पार्थं समाश्वासयितुं तस्मै कृपया परया गीतोपनिषदं उपादिशच्च। तदात्वे नवमाध्यायान्ते "विष्टभ्याहमिदं कृत्स्नं एकांशेन स्थितो जगत्" इति सर्वस्य जगतः स्वांशैकदेशत्वं, स्वस्य च ईश्वरत्वं प्रकटितवान्। तच्छ्रुत्वा अर्जुनस्य सर्वजगच्छरीरविशिष्टस्य भगवत दिदृक्षा सञ्जाता। अनन्तरेऽध्याये "द्रष्टुमिच्छामि ते रूपमैश्वरं पुरुषोत्तम!" इति मुक्तकण्ठं भगवन्तं प्रार्थितवांश्च। तदाऽऽ-

श्रितवात्सलो भगवान् तस्मै "दिव्यं ददामि ते चक्षुः" इति ज्ञान-चक्षुः प्रदाय "इहैकस्थं जगत्कृन्त्सं पश्याद्य सचराचरं। मम देहे गुडाकेश।" इति बिश्वरूपं प्रदर्शयामास च। अथ "तत्रैकस्थं जगत्कृत्स्नं प्रविभक्तमनेकधा। अपश्यद्देवदेवस्य शरीरे पाण्डव-स्तदा।" तच्च रूपं अनेकवाहूदरवक्त्रनेत्रं देवर्षियोगिसङ्घ-सेवितं स्तुत्वा प्रणम्य क्षमां प्रार्थ्य अन्ते तन्मुखे प्रविशन्तं लोकजातं दृष्ट्वा भीतभीतोऽर्जुनः "उपसंहर विश्वात्मन् अतो रूपमलौकिक-मिति" वासुदेववत् "तेनैव रूपेण चतुर्भुजेन सहस्रबाहो भव विश्वमूर्ते" इति तत् उपसंहरेत्ययाचत। भगवांश्च यथापूर्वं सौम्यं रूपमास्थाय तं समाश्वासयत्। एवं दुर्योधनसभाप्रभृतिषु बहुषु स्थलेषु भीष्मादिभक्तेभ्यो दर्शितं विश्वरूपं भारतसंहितायां व्यासभगवान् अस्मदनुजिघृक्षयोपनिबद्धवानिति सर्वपण्डितलोक-विदितम्। किं त्विदानीं श्रीमद्रामायणे आदिकाव्ये वल्मीक-सम्भवेन प्रदर्शितं भगवतो रामचन्द्रस्य विश्वरूप मधिकृत्य किंचित्स्मरामः।

त्रैलोक्यहितकामेन परमर्षिणा नारदेन दत्ताशीः खलु प्राचेतसो मुनिः। स्वयंभूर्भगवान् ब्रह्मापि "मच्छन्दादेव ते ब्रह्मन् प्रवृत्तेयं सरस्वती" इति। स्वानुग्रहेणैव "मानिषाद प्रतिष्टां त्वं अगमः शाश्वतीः समाः। यत्क्रौञ्चमिथुनादेकं अवधीः काममोहितम्" इति मङ्गळश्लोकं तन्मुखेन आविरकारयत्। उपलब्धब्रह्म-प्रसादातिशयश्च महर्षिः रहस्यं च प्रकाशं च श्रीसीतारामयोर्वृत्तं ज्ञानचक्षुषा साक्षात्कृत्य आदिकाव्यादर्शे दर्शयत्यस्माकम्। "न ते वा गनृता काव्ये काचि दत्र भविष्यति" इति ब्रह्मणः प्रसादात् तदीयवाक्षु स्वल्पोऽप्यंशः नानृतं भवितु मर्हति। सकललोकानु-जिघृक्षया वेदवेद्ये परमप्रमेये भगवति दशरथतनयत्वेनोर्व्या मवतीर्णे

सति सकलप्रमाणशेखरभूता त्रिवेद्यपि श्रीरामायणरूपतयाऽवातरदिति किल वैदिकानां भारतीयानां निर्धारणम् ।

कवयः खलु लोके स्वकीयमनुभवं स्वनिबद्धानां कथापात्राणां वाग्भिः द्वारेण अस्माकं प्रकटयन्ति । एवं श्रीवाल्मीकिमुनि रपि श्रीरामायणकथापात्रैः स्वेन यथादृष्टं बहुषु स्थलेषु प्रकटयति । तत्र वसिष्ठवचनात् लब्धाश्वासेन दशरथेन प्रदिष्टौ श्रीरामलक्ष्मणौ विश्वामित्रमुनिः सिद्धाश्रमं आनिनाय । स्वस्य सर्वज्ञभावं उपगहमानः श्रीरामः अजानन्निव तदाश्रमवृत्तमपृच्छत् । तदा मुनिः श्रीवामनावतारवृत्तं तदाश्रममधिकृत्य वर्णयन्नपि श्रीराघवरूपस्य भगवतो मानुषभावनां अनुवर्तितुकामनया वामनविष्णुः राघवस्य पूर्वयुगकृतापरावतर इत्यंशमात्रं न प्रकटयति । पूर्वं तत्र कश्यपप्रजापतिः अदित्या सह वर्षाणां सहस्रं तपः कृत्वा विष्णुं साक्षात्कृत्य एवं तुष्टाव "तपसा त्वां सुतप्तेन पश्यामि पुरुषोत्तमम् । शरीरे तव पश्यामि जगत्सर्वं मिदं प्रभो? त्वमनादिरनिर्देश्यः त्वामहं शरणं गतः" इति । ततस्तुष्टो भगवान् तयोः पुत्रत्वेन त्रिषु जन्मसु वामनप्रश्निगर्भवासुदेवरूपेण अवतारं वरमनुग्राह्यांतर्दधे । वामनः अत्रैव ब्रह्मचर्यं चचारेति कथां ताभ्यां मुनिः श्रावयति स्म । इदं व्याजमात्रम् । वस्तुगत्या विश्वामित्रः श्रीरामचन्द्ररूपं साक्षात्कृत्यैवं तमेव स्तौतीति भात्यत्र । पूर्वं हि "अहं वेद्मि महात्मानं रामं सत्यपराक्रमं, वसिष्ठोऽपि महातेजाः येचान्ये तपसि स्थिताः "इति वदन् श्रीरामस्य विष्णोरवताररूपत्वं जानात्येवेति ध्रुवमवगम्यते । अतः "हे राम त्वां अनेकवर्षार्जितेन तपसा विश्वामित्रोऽहं समस्तं जगच्छरीरं पुरुषोत्तमं पश्यामि, शरणं च गतोऽस्मी" त्येव प्रस्तौति । एवं अत्र वाल्मीकिः विश्वरूपं संपश्यन् तदुपनिबबन्ध बालकाण्डे ।

आरण्यकाण्डमवलोकयामः। भगवता निगृहीतः शत्रुरपि यदि तन्महिमानं यथावत् अवगच्छेत् तर्हि कृत्स्नं जगत् तन्मयमेव तस्य दृश्येत। मारीच एवात्रनिदर्शनम्।

श्रीरामलक्ष्मणाभ्यां विश्वामित्रमुखे रक्ष्यमाणे सति तत्र विघ्नं विधातु मागतौ सुबाहुमारीचौ राक्षसौ श्रीरामकार्मुक-विनिर्गतसायकैर्लब्धशिक्षौ भवतः। तयोः सुबाहुं श्रीरामः अहन्, किन्तु दयया मारीचं एकेन शरेण सागराम्भसि निचिक्षेप। पुनः कदाचित्पञ्चवटीनिकटे कुटीरे सभार्यः सानुजश्च श्रीरामः निवसतीत्युपश्रुत्य मारीचः पूर्ववैरं निर्यातयितुकामः त्रिभिः सखिभिः सह मृगरूपं धरन् ऋषीन्वञ्चयन् रामसमीपे सञ्चचार। किञ्चिदिव स्वकीयं दुःचरितमपि कर्तुं आरेभे। तदापि त्रीन् राक्षसान् विनिहत्य प्रबलप्रहारजर्जरगात्रं सप्राणं मारीचं सुदूरं विधावयति स्म। तदा संयक् ज्ञातश्रीरामबाणमहिमा सः प्रव्राजितः तापसो भूत्वा आश्रमपदे न्यवसत्। तदा रावणः मातुलं मारीचं उपेत्य सीताहरणे साहाय्यमभ्यर्थयति स्म। तदा "सुलभाः पुरुषा राजन् सततं प्रियवादिनः। अप्रियस्य च पथ्यस्य वक्ता श्रोता च दुर्लभः" इति पीठिकामारचयन् बहु उपदिश्य रामास्त्रमहिमानमावेद्य इत्थमाह — "वृक्षे वृक्षे च पश्यामि चीर-कृष्णाजिनाम्बरं, गृहीतधनुषं रामं पाशहस्त मिवान्तकम्। अपि रामसहस्राणि भीतः पश्यामि रावण! रामभूत मिदं सर्वमरण्यं प्रतिभाति मे" रेफादीनि रथरत्नराजपदानि श्रुतानि सन्ति तस्य मनसि रामनामशङ्कामुत्पाद्य तं साक्षात्कारयन्ति। एव रूपराममयजगद्दर्शनं राक्षसलब्धं वाल्मीकिरत्र वर्णयति। युद्ध-काण्डे च द्वयोर्वाग्भ्यां एवं भूतं भगवद्रूपं अस्माकं पुरतः प्रकटयति मुनितल्लजः।

तथाहि । रावणभार्या मण्डोदरी पतिव्रतारत्नतया प्रसिद्धि गता । तत्पितुः पितामहाच्च विष्णोः प्रभावं श्रुतवती च सा श्रीराममहिषीहरणं रावणकृतं बहुधा अधर्म इति यथावकाशं बोधयति च । युद्धप्राङ्गणे श्रीरामबाणाहतं दिवङ्गतं रावणं अवगम्य साश्रुवर्षं प्रलापैः तदुपरि पतति । पतित्वा तच्चेष्टितान्यधिकृत्य बहुधा विलपति च । हे रावण! त्रैलोक्यमेव त्वद्वीर्येण समाक्रान्तं, त्वत्तो भीतं च । तादृशः कथं मानुषमात्रेण हतो निधनं प्राप्त इति विश्वसिमि ? इत्याश्चर्यमपि तस्याः महदस्ति । तदा अवष्टब्धकार्मुकं चक्रवर्तिकुमारं पश्यति । यमः इन्द्रो वा श्रीरामरूपमादाय रावणं निहन्तुं आगत इति तर्कयति सा । किन्तु पतिव्रतायाः तस्याः चक्षुरुन्मील्य श्रीरामः स्वरूपं तस्यै प्रकटयति । "स हि देवै रुदीर्णस्य रावणस्य वधार्थिभिः । अर्थितो मानुषे लोके जज्ञे विष्णुः सनातनः ।" इति पूर्वं वाल्मीकि प्रकटितं रामावताररहस्यमपि सा अवगच्छन्ती इत्थमाह — "व्यक्तमेष महायोगी परमात्मा सनातनः । अनादिमध्यनिधनो महतः परमो महान् । तमसः परमो धाता शङ्खचक्रगदाधरः । श्रीवत्सवक्षा नित्यश्रीः अजय्यः शाश्वतो ध्रुवः । मानुषं वपुरास्थाय विष्णुः सत्यपराक्रमः ।" अत्र महतः परमो महान्, अनादिमध्यनिधनः, इति विशेषणद्वयम् "अनादिमध्यान्तमनन्तवीर्यं" इति पुरुषोत्तमरूपं प्रत्यभिज्ञापयत् शङ्खचक्रगदाधरस्य विश्वरूपस्य मन्दोदरीदर्शनविषयस्य प्रतिपादकमिति व्यक्तमेव । उपरि च सा आह "सर्वलोकेश्वरः साक्षात् लोकानां हितकाम्यया सराक्षसपरीवारं हतवां स्त्वां महाद्युतिः" इति । अत्र महाद्युतिः इति तस्य दिव्यशरीरप्रकाशः "दिवि सूर्यसहस्रस्य" इत्यादिना पुरुषोत्तमशरीरं कोटिसूर्यप्रकाशं तुलयति ।

लङ्काराज्ये लक्ष्मणमुखेन विभीषणं अभिषिच्य ततः राघवः सीतां अशोकवनात् स्वलंकृतां आनेतुं आज्ञापयति स्म। सीतादेवीं दृष्ट्वा तस्याः अप्रियाणि वाक्यानि वज्राहतसन्निभानि प्रायुङ्क्त। तां च न स्वीकरिष्यति, शङ्कितचारित्रः सीताविषये रामः, इति विज्ञाय चितायां ज्वलन्तमाग्निं सम्पाद्य तं प्रदक्षणी कृत्य "यथा मां शुद्धचारित्रां अदुष्टां जानाति राघवः। तथा लोकस्य साक्षी मां सर्वतः पातु पावकः" इति अग्निदेवं अभ्यर्थयमाना तत्रापतत् सीता। तस्याः पातिव्रत्यतेजः असहमानः पावकः अम्लानमण्डनां तथैव राघवायार्पयति। तत्रसमागताः सर्वे देवाः ऋषयश्च प्राञ्जलि-रामं अस्तुवन्। तत्र ब्रह्मकृतः स्तवः इत्थं — हे "राम त्वं आत्मानं मानुषं मन्ये" इति स्वमाहात्म्यं वृथा गापयितुं वाञ्छसि। वस्तुतस्तु चक्रायुधधरः नारायणः सर्वव्यापी त्वं लोकानां हित-काम्यया देवर्षिप्रार्थितः दशरथपुत्रतया अवातरः। सीता च भवत्पत्नी लक्ष्मीरेव। वयं सर्वे तवानुचराः इति। तदैव भगवतः समस्तजगदाधारभूतं विश्वरूपमपि वर्णयति "दृश्यते सर्वभूतेषु ब्राह्मणेषु च गोषु च। दिक्षु सर्वासु गगने पर्वतेषु वनेषु च। सहस्रचरणः श्रीमान् शतशीर्षः सहस्रदृक्" इति। अहं ते हृदयं राम जिह्वा देवी सरस्वती। देवा गात्रेषु रोमाणि निर्मिता ब्रह्मणा विभो! जगत्सर्वं शरीरं ते स्थैर्यं ते वसुधातलम्।" इत्येवं "त्वं सहस्रशीर्षनेत्रपाणिपादः, सर्वभूतधारकः। तव गात्रे ब्राह्मणाः देवाः अहं सरस्वती सर्वे स्मः। सर्वं जगत् ते शरीरमेवेति स्तुवता ब्रह्मणा दृष्टं श्रीरामस्य विश्वरूपत्वमेव वाल्मीकिः स्वकाव्यान्ते प्रकटयतीति वाल्मीकिदृष्टं विश्वरूपं श्रीरामचन्द्रस्य परमपुरुषा-वतारत्वस्थापकं इति शम्।

# आनन्द - उत्तरायणपरीक्षाफलितानि

## *Samskrita Bhasha Pracharini Sabha, Chittoor.*

### Results of March Examinations 1975.

The following are the Register Numbers of successful candidates who appeared for the Sanskrit Examinations held on 7th, 8th and 9th March 1975.

PARICHAYA

I Class 1 16 189 235 313 333 432
433 435 436 437 559 570 571 598 608 667
711 712 713 714 722 772 779 785 818 819
820 836 837 839 841 849 883 884 916 932
936 963 967 1017.

II Class 3 11 12 13 14 15 33
36 41 42 44 45 60 81 82 83 84
85 86 126 134 146 151 169 170 171 174
175 181 182 185 186 187 188 197 198 220
227 237 250 316 317 320 321 322 324 326
334 343 377 428 429 431 434 438 439 440
441 448 453 454 460 465 474 477 488 557
558 564 572 573 574 575 577 578 588 590
591 592 605 606 607 609 633 641 655 656
661 666 668 681 682 688 705 708 719 720

721 751 759 768 774 775 776 821 827 834
835 840 843 844 846 847 852 853 856 857
861 885 921 931 933 935 937 939 946 962
964 965 969 976 977 979 1013 1014 1015 1016
1029 1043 1048 1068 1131 1144 1152 1154 1156 1157

III Class 34 35 40 46 47 48 50
52 54 56 57 58 59 63 64 65 66
67 103 110 114 116 121 122 125 127 128
130 132 133 135 142 143 144 145 149 152
161 163 167 168 173 176 177 178 179 180
183 184 190 191 193 194 195 196 199 200
201 202 203 204 207 209 210 219 222 225 226
230 233 234 236 239 240 241 245 249 255
257 318 325 328 330 332 346 347 349 350
351 352 353 354 355 371 374 375 430 442
445 446 449 450 451 452 455 456 457 458
459 462 466 469 470 476 484 485 490 561
565 576 579 593 599 600 601 604 630 635
637 638 639 642 645 653 654 657 659 660
664 665 680 683 684 686 687 690 691 701
702 703 704 707 710 715 716 717 718 723
745 746 749 750 753 756 769 770 771 773
826 828 829 831 833 838 842 845 848 854
855 859 860 895 917 918 940 942 943 966
970 971 974 978 1005 1012 1019 1020 1023 1024
1026 1027 1028 1042 1044 1045 1046 1047 1051 1070
1074 1075 1076 1077 1078 1083 1088 1091 1092 1094
1095 1096 1097 1098 1101 1102 1104 1132 1133 1134
1135 1155.

## ABHIGNA

I Class 92 95 97 98 211 212 213
263 267 444 505 612 669 788 799 973 1140

II Class 6 9 17 24 26 27 30
87 88 89 90 91 93 96 99 100 101
156 214 215 258 259 260 261 264 270 273
280 281 283 to 296 314 315 356 358 360
363 366 367 369 378 379 386 387 491 to 495
497 499 to 504 507 513 514 516 518 519
524 525 529 580 582 583 584 585 610 611
671 672 693 695 696 700 726 729 733 787
789 790 792 794 795 796 797 822 909 910
914 938 972 991 994 997 998 1141 1145 & 1147.

III Class 23 25 70 75 to 77 79 94
138 139 216 217 218 262 265 268 269 271
275 277 278 279 282 357 359 368 370 380
383 388 389 390 391 394 396 398 399 400
496 498 506 508 511 512 517 520 522 526
527 528 530 531 533 534 581 586 587 613
662 663 670 694 697 698 724 730 732 760
786 793 798 800 886 887 900 901 902 911
913 915 980 981 983 984 985 1000 1008 1105
1106 1107 1108 1148 1149.

## VICHAKSHANA

I Class 102 only.

II Class 298 306 408 536 541 603 763 809 987 988 1010 1018 1032 1038.

III Class 107 297 300 to 305 307 to 312 406 409 to 411 413 414 416 535 537 to 540 543 545 to 547 550 551 602 614 to 626 673 736 801 802 804 805 806 807 862 to 864 876 905 925 928 951 952 953 986 1009 1036 1037 1039 1040 1066 1110 1111 1113 1114 1117 1118 1119 1120 1122 1123 1124 and 1126.

## SAMARTHA

I Class NIL.

II Class 425 678 739 954 961 988 990 1127.

III Class 80 424 674 677 738 740 955 to 960 990 1128.

Part I only 552 553 554 555 556 676 811.

Part II only 417 to 423 812 and 891.

## KOVIDA

I Class NIL.

II Class 20 365 678 892 and 893.

III Class 159 and 894.

I Part only 814 to 816 and 825.

| | |
|---|---|
| II Part only | 823 and 824. |
| III Part only | 814 815 825 and 929. |
| IV Part only | NIL. |
| V Part only | NIL. |

The following candidates stood first in first Class in the Examinations as shown below.

1. PARICHAYA 667 M. Anantha Venkata Rao, Peddapuram.
2. ABHIGNA 92 P. Sunanda, Kothapalem.
3. VICHAKSHANA NIL.
4. SAMARTHA NIL.
5. KOVIDA NIL.

CHITTOOR,
15—5—75

K. SREENIVASACHARI,
PARIKSHAMANTHRY.

# आनन्द उत्तरायणपरीक्षासु-March 1975
## उपयुक्तानि केन्द्राणि

(१) इन्द्रप्रस्थम् (२) कर्नूलु (३) कडपा (४) कलिचेर्ल (५) कावलि (६) काकिनाड (७) कोत्तपालेम् (८) कोयम्ब-त्तूरु–बि (९) कन्दुकूरु (१०) गूडूरु (११) गुण्टूरु (१२) चित्तूरु (१३) चिन्ताड (१४) जिल्लेल्लमूडि (१५) तणुकु (१६) तिरुच्चि (१७) तिरुपति (१८) तिरुमल (१९) तेनालि (२०) तञ्जावूरु (२१) नडकुदूरु (२२) पाकाला (२३) पालकोंड (२४) पादूरु (२५) पिठापुरम् (२६) पेरुङगलत्तूरु (२७) पुसुलूरु (२८) पेद्दापुरम् (२९) प्रोद्दटूरु (३०) पोदूरु (३१) क्रोम्पेट (३२) मदरास् (३३) मदुरै–ए (३४) मदनपल्ली (३५) मन्नार्गुडि (३६) मर्लपाडु (३७) मिन्नात्तूरु (३८) मुक्कामल (३९) बेंगलूरु (४०) बोब्बिलि (४१) राजमन्ड्री (४२) रायचूरु (४३) लेपाक्षी (४४) वडुवूरु (४५) विजयवाडा (४६) विल्लुपुरम् (४७) श्रीकाकुलम् (४८) श्रीरङ्गम् (४९) सेलम् (५०) हैदराबाद (५१) कलिङ्गपट्नम् (५२) मछिलीपट्नम् (५३) मदुरै बि (५४) विजयनगरम् (५५) अनकापल्ली

## आनन्द - उत्तरायणपरीक्षासु उत्तीर्णाः – ७८१

| परीक्षाः | अभ्यर्थिनः | उत्तीर्णाः | | | |
|---|---|---|---|---|---|
| | | प्र. श्रे. | द्वि. श्रे. | तृ. श्रे. | खंडशः |
| परिचयः | 654 | 41 | 147 | 230 | – |
| अभिज्ञः | 294 | 17 | 114 | 93 | – |
| विचक्षणः | 146 | 1 | 14 | 72 | – |
| समर्थः | 44 | — | 8 | 14 | 16 |
| कोविदः | 18 | — | 5 | 2 | 7 |
| आहत्य | 1156 | 59 | 288 | 411 | 23 |

संस्कृतभाषाप्रचारिणी सभा,
4—6—1975.

की. श्रीनिवासाचार्यः,
परीक्षामन्त्री.

# राक्षस दक्षिणायन-परीक्षाणां सन्नाहकार्यक्रमः

**Programme of September 1975 Examination.**

| विना विलम्बशुल्कं आवेदनपत्राणां प्रेषणायान्तिमावधिः | १ रू. विलम्बशुल्केन सह आवेदनपत्र-प्रेषणाय अन्तिमावधिः | परीक्षाणां प्रचलनसमयः 1975 सेप्टम्बर मासे |
|---|---|---|
| 20—7—75 | 31—7—75 | कोविदः 6, 7, 8 तिथिषु, विचक्षणसमर्थौ 6, 7 तिथ्योः, परिचयाभिज्ञे 7 तिथौ |

आवेदनपत्राणि 20 पैसामात्र-पोस्टलचीटिकाप्रेषणे विना मूल्यं प्रेष्येरन् ।

**31—7—75 परतः प्रेष्यमाणानि आवेदनपत्राणि सुतरां न स्वीक्रियेरन् ।**

परिचयः रू. 2—00 अभिज्ञः रू. 4—00

विचक्षणः रू. 6—00 समर्थः 8—00 खण्डशः 5—00

कोविदः रू. 12—00 खण्डशः 5—00

विशेषानुमतिशुल्कम् (Examption Fee) रू. 5—00

विलम्बशुल्कम् (Late Fee) रू. 1—00

परिचयाभिज्ञविचक्षणसमर्थपाठ्यपुस्तकानि सभायां लभ्येरन् । विशेषजिज्ञासायां 20 पैसामात्राः पोस्टलचीटिकाः प्रेषणीयाः ।

प्रधानमन्त्री,
संस्कृतभाषाप्रचारिणी सभा,
चित्तूरु. (आ. प्र.)

# सुभाषितानि

रचयिता – श्री एन्. रामनाथार्यः

[ पूर्वानुबन्धः ]

अस्ति यद्यपि सर्वत्र नीरं नीरजमण्डितम् ।
रमते नैव हंसस्य मानसं मानसं विना ।। ।। ५७३ ।।

Though lakes adorned with lotuses are not wanting everywhere, the swan does not feel happy in mind except when it is in Manasa lake.

परनिन्दासु पाण्डित्यं स्वेषु कार्येष्वनुद्यमः ।
प्रद्वेषश्च गुणज्ञेषु पन्थानो ह्यापदां त्रयः ।। ।। ५७४ ।।

Cleverness in cavilling at others, lethargic in discharging ones duties, feeling jealous of persons of merit, these three pathways are dangerous to tread for everyone.

कुलजोऽयं गुणवानिति विश्वासं नाचरेत् खलप्रकृतौ ।
ननु मलयचन्दनादपि समुत्थितोग्नि र्दहत्येव ।। ।। ५७५ ।।

One should not place confidence in a wicked person eventhough he is born in a good family and is likely to be of good conduct, It is

well-known that even though born of the sandal-wood on Malaya Mountain, the fire still burns everyting.

असतोऽपि भवति गुणवान् सद्वृत्तोऽपि परं भवन्त्यसद्वृत्ताः ।
पङ्का दुदेति कमलं कृमयः कमलादपि भवन्ति ।। ५७६ ।।

At times a low person raises high on account of his ennobling conduct and it is also true that a great man falls low on account of his bad behaviour, lotus is born out of mud and germs are born of lotus.

पित्रास्येदं कृतमिति तत्कर्मणि योजयेन्न दुष्पुत्रम् ।
हवनविधौ हव्यभुजां तिलं प्रशंसन्ति न तु तैलम् ।। ५७७ ।।

This work was previously done by his father so thinking an underserving son should not be entrusted with the same task. In sacrifices, sesame is used to please Devas but not oil extracted from the sesame.

न हीदृशं संवननं त्रिषु लोकेषु विद्यते ।
दानं मैत्री च भूतेषु दया च मधुरा च वाक् ।। ।। ५७८ ।।

These qualities are praised in all the three worlds-namely, charity; compassion towards all beings, friendship with and pleasing speech.

[अनुवर्तते]

# अभिनववासवदत्ता

कर्ता – की. शे. वट्टिपल्लि नरकण्ठीरवशास्त्री

[ पूर्वानुबन्धः ]

कुररकुलनखरशिखरो त्खण्डितपृथुरोमशकलसङ्कीर्णं ।
क्रोष्टुकुलोत्सृष्टमहाकर्कटकर्परनिरन्तरप्रान्तम् ॥ २६३ ॥

दर्पणमिव वसुधाया स्फाटिककुट्टिममिवाम्भुसांपत्युः ।
पुलिनतलमेत्य जलधिं प्रवेष्टुमुपचक्रमे स मरणेच्छुः ॥ २६४ ॥

सानुग्रहेष्वथ महाग्राहेष्वभयङ्करेषु मकरेषु ।
नक्रेष्वक्रूरेषु प्रादुरभू त्कापि भारतीनभसः ॥ ॥ २६५ ॥

विरमार्यमरणयत्ना द्भविता भवतः पुनः प्रियासङ्गः ।
अचिरेणेति गिरं स श्रुत्वा विरराम मरणसाहसतः ॥ २६६ ॥

अथ तत इतः परिभ्रमलोलः फलमूलकलिततनुयात्रः ।
दयितासमागमेच्छुः कियन्त्यनेहांसि तत्र स निनाय ॥ २६७ ॥

अत्रान्तरे समुदभू द्वर्षाकालो वियोगिजनकालः ।
प्रशमितरजःप्रसार स्तापस इव विधृतजलदकरकश्च॥ २६८ ॥

अथ रतिनखमार्जनकृतरत्नशलाकेव रत्नशक्तिरिव ।
नभसीन्द्रधनुर्वल्ली मदनस्य विलासयष्टिरिव रेजे ॥ २६९ ॥

अतितृष्णावेगवशा त्पीतं सलिलै स्सहाब्धिशङ्खगणं ।
नभसि बलाकाव्याजा त्समुद्वमन्निव रराज जलदोघः ॥ २७० ॥

घननिकषोपलमध्ये जलदागमहेमकारसंघृष्टा ।
काञ्चनरेखेव तटिल्लेखा शुशुभे नभोङ्गणे सद्यः ।। २७१ ।।

जलदघटासङ्घट्टनरयपातिततारकानिकाय इव ।
रुरुचेकरकानिकरो लाजाञ्जलिरिव मनोजविजिगीषोः ।।२७२।।

प्रचुरेन्द्रगोपभरितं नवशाद्वलमुल्ललास सर्वत्र ।
लाक्षारसाङ्ककलितं स्तनोत्तरीय मिव भूविलासिन्याः ।।२७३।।

घनकलशजलैः प्रावृट्चेटचां सिक्त्वा भुवं गतायाञ्च ।
समुपाजगाम सहसा मन्दरमाबिभ्रती शरच्चेटी ।। ।। २७४ ।।

तदनु भरद्वाजद्विजवाचाटविशालविटपिविटपौघे ।
उद्भ्रान्तशुककुलाकुलकलमक्षेत्रप्रविष्टकलहंसे ।। ।। २७५ ।।

तटनिकटस्थलविचरत्सारसकुलरसितरम्यकासारे ।
परित श्शरदारम्भे विजृम्भमाणे परिभ्रम न्विपिने ।। २७६ ।।

दृष्ट्वा विस्मितचित्त स्सुदृढं परिरभ्य ता मथाप्राक्षीत् ।
दयिते वासवदत्ते जीवितभूते किमेत दाश्चर्यम् ।। ।। २७७ ।।

सा प्रत्युवाच चैवं नृपतनयाऽऽचान्तमोचया वाचा ।
कन्दर्पकेतु मुत्कटवर्षातपशीतवातसङ्क्लिष्टम् ।। ।। २७८ ।।

नन्वार्यपुत्र भवता मदर्थ मत्यन्तदुःख मनुभूतं ।
उत्सृज्य हन्त राज्यं परिभ्रमस्येक एव विपिनेषु ।। ।। २७९ ।।

उपवासखिन्नचेतसि निद्राशान्ते तृषातुरे भवति ।
बुध्वा प्रथम महं ते फलमूलादिक मगा मुपाहर्तुम् ।। २८० ।।

गत्वा फलमूलादिक मन्विष्यन्ती च तत इतो विपिने ।
तरुगुल्मान्तरित महं पुरत स्सेनानिवेशमद्राक्षम् ॥ ॥ २८१ ॥

किमयं तात व्यहो मा मन्वेटुं समागतः प्रहितः ।
आहोस्वि दार्यपुत्रव्यूह इति स्वय मतर्कयं मनसि ॥ ॥ २८२ ॥

अत्रान्तरे कुतश्चि त्किरातसेनापति र्बलोपेतः ।
चारैः कथितोदन्तो दूरा दभिधावति स्म वेगेन ॥ ॥ २८३ ॥

तदनु तदन्यः कश्चि त्किरातसेनापति स्तथाभूतः ।
मृगयारसानुविद्ध स्तच्छ्रुत्वा धावति स्म वेगेन ॥ ॥ २८४ ॥

अथ गृध्रयोरिव तयो रेकामिषलुब्धयो रभूद्युद्धं ।
रविकरतति स्तदाभू न्निबिडशरासारदुर्दिनच्छन्ना ॥ ॥ २८५ ॥

रणकर्मविशारदकरदूरोत्क्षिप्तेन मण्डलाग्रेण ।
समरोद्भटाः प्रतिभटा दळिताः परिषस्वजु स्सुपर्ववधूः ॥ २८६ ॥

समरावलोकनागतनभश्चरानेकचारणौघस्य ।
विरराज चरणराजि स्तोरणमालेव युद्धरङ्गस्य ॥ ॥ २८७ ॥

विध्वस्तध्वजपटलं पतत्पताकं विशीर्णकरवालं ।
अन्योन्यं निहतमभूत्सैन्यं परं गतास्मि तदा ॥ ॥ २८८ ॥

अथ यस्याश्रमभूमि स्समुनि स्समिदादिकं समादाय ।
आगत्य योगदृष्टया विदितोदन्तो विलोक्य मां निकटे ॥ २८९ ॥

आः पापे दुर्ललिते त्वदर्थं मय माश्रमो मम ध्वस्तः ।
इत्युक्त्वा कुपितो मां शिलामयी पुत्रिका भवेत्यशपत् ॥ २९० ॥

Please mention your membership Number for easy correspondence.

*R. N. 1845/60.* *Postal C. T. R. 11.*

आन्ध्रप्रदेशसर्वकारेणानुमोदिता R. C. No. 27-A 3/65 Dated 14-7-65.
Licensed to Post without Prepayment. LICENCE No. 57.

भारतसर्वकारेण पुरस्कृता च

# गैर्वाणी

वार्षिकम् ५-००

## प्रहेलिके

★

पानीयं पातु मिच्छामि त्वत्तः कमललोचने ।
यदि दास्यसि नेच्छामि नो दास्यसि पिबाम्यहम् ॥

यदि दासी असि नेच्छामि, नो दासी असि तदा पिबाम्यहम् ।

शिलार्पितपदद्वन्द्वा नासार्पितकरद्वया ।
अभूद् व्यक्तस्तनी नारी कथमेतद्भविष्यति ॥

मध्यभागे रीतिः पित्तलं तद्विशिष्ठम्; (पक्षे) मध्ये रीकारविशिष्टं शरम्; शरीरमित्यार्थः ।

Published by Sri N. Ramanatha Aiyer B. A; B. L., Advocate & Secretary S. B. P. Sabha, Chittoor (A. P.)
Printed by Sri K. V. Raghavan, (in-charge) at Vijaya Press, Chittoor (A. P.) C. 1500.